विद्यावाचस्पतिश्रीमधुसूदनशर्ममैथिलैरुपदिष्टः वैदिकविज्ञानस्योदयो यस्मै । साशम् आशया सहितं यथा तथा, एतत्प्रकाशात् वैदिकविज्ञानप्रचारस्य भूयसी आशेति भावः । शतपथब्राह्मणादिभाषान्तरकर्ता बालचन्द्रमुद्रायन्त्रालयाध्यक्षः पं० मोतीलालशास्त्री ॥ १०१ ॥

क०— यस्य हि पितामहोऽगदंकारेषु कीर्तिमधा-
त्काव्यकला-लङ्कारेषु चाऽगादुपश्लोक्यताम्
भङ्गारससेवकोऽपि गङ्गाधरस्तातो यस्य
वैदुष्याऽनुषङ्गाद्ययौ सद्भिरुपढौक्यताम् ।
मञ्जुनाथशकटिनिधानतोऽतिहानिं गतो
विग्रहं विधाय वंशतोऽयात्खलभोग्यताम्
परिहरणीयेष्वपि पर-हरिभावाऽऽकुलो
नरहरिभट्टः सैष सादरं विलोक्यताम् ॥१०२॥

पितामहः श्रीकृष्णरामभट्टमहोदयः अगदंकारेषु वैद्येषु उपढौक्यताम् अनुसरणीयताम् । गृहे घोटकशकटयादिस्थापनप्रभृतिभिर्व्ययबहुलकार्यैः । मञ्जुनाथस्य शकटिरति स्वर्थो नोचितः । वंशतः स्ववंशजैः सह कलहं विधाय गृहभेदसन्तोषिणां खलानामुपभोग्यताम् अयात् । गृहे कलहप्रवर्तकतया सर्वस्वभक्षकतया च परिहरणीयेषु दूरतस्त्यक्तव्येष्वपि वाककील-'कामदार' प्रभृतिषु 'अयम् अपरः हरिः ( भगवान् )' इति आदरभावाऽऽकुलः ॥१०२॥

दो०—धनविलासविन्मतिबलात्कृतिलालित्यमुपैति ।
चित्र—कलालवलास्यधृक् कलाधरः समुदेति ॥१०३॥

कृतिलालित्यम् दोहादिकवितामाधुर्यम् । कलाधरः कलाधरभट्टमहो-

दयः । अन्यः कलाधरोपि चन्द्रोऽपि चित्रं यथा तथा कलानां लास्यधृग् सन् उदेति । किञ्च तस्मिन्समये धनविलासविदां कामिनां मतिबलात् कामकलनालालित्यं प्राप्यते ॥ १०३ ॥

क०– बहुलं प्रजासु कर्मपाटवं विवृण्वन्नेव
क्रमशोऽयं राजकीयकार्यगो निरीक्ष्यताम्
कर्मकाण्डकूटस्थले कौशलेन जल्पन् वच-
श्चातुरीबलेन लब्धकीर्तिः प्रसमीक्ष्यताम् ।
कर्मकाण्डतुल्यमेव नर्मकाण्डवेदी भृशं
प्रासङ्गिकवार्तापटुः प्रचुरं परीक्ष्यताम्
अधुनोपलभ्यमानवैदिकसच्चूडामणिः
सोयं बत बच्चूलालचौबे चिरमीक्ष्यताम् ॥१०४॥

कर्मपाटवं याजमानिककार्यकौशलम् । नर्म परिहासः । उपलभ्यमानेषु वैदिकेषु सन् ॥ १०४ ॥

सो०– साहित्योन्नतिदायि–हिन्दीविद्यालयधरे ।
गौरवमतिमुपयाहि गौरीलालकवीश्वरे ॥१०५॥

हिन्दीविद्यालयः 'कविमण्डल–हिन्दीसाहित्यपाठशाला', तत्परिचालके । कान्यकुब्जवंशप्रसूतो जयपुरराजकीयकवीश्वराणामन्यतमः सोयं महाभागो निःस्वार्थभावेन हिन्दीसाहित्यपाठशालायां अध्यापकत्वमन्यान्यचानुषङ्गिकं तत्कार्यं निरुह्य तामेतां पाठशालां बहूनि वर्षाणि यावत्साफल्यपूर्वकं परिचालयामास । अस्यां पाठशालायामधीत्य, 'हिन्दी साहित्यसंमेलन' परिचालिताः प्रवरपरीक्षाश्च समुत्तीर्य बहवः स्नातका हिन्दीसाहित्यधुरां धरन्ति । हन्त सोयमकाण्ड एव लोकान्तरमुपययौ ! ॥१०५॥



रामनिवास बाग जयपुर

दो०— कविवरपद्माकरकुलज-मसहजकविता यस्य ।
गणय गिराधरकविमिमं कविगणने विन्यस्य ॥१०६॥

गोविन्दरावेतिख्यातनामकस्तैलङ्गभूसुरोऽयम् ॥१०६॥

सो०— यत्पाठः पुनरायमिश्रो भाति फलोदयात् ।
सोयं सुन्दररायमिश्रो मञ्जुमना लसति ॥ १०७ ॥

येन कृतो वाल्मीकिरामायणादेर्वर्णपूर्वकः पाठः आयेन धनागमेन मिश्रः । अयं हि पारिश्रमिकं धनं नियतीकृत्य पाठपुण्येन लोकानां कार्याणि साधयामास ॥१०७॥

# उद्यानवीथी

## ※ रामनिवासः ※

साङ्गानेरगोपुरसमीपवर्तिद्वारदेश-
मुल्लङ्घ्येममातुरचिकित्सालयमीक्षेथाः
'मेयो'मूर्तिमालोक्यैव जन्तुशालानिकटपथा-
द्वर्तुलविशालां बैण्डवेदिं प्रसमीक्षेथाः ।
मञ्जुनाथ नानाविधविटपिनिरुद्धरवि-
रश्मिपुञ्जमेतं लताकुञ्जमभिवीक्षेथाः
वाञ्छसि सुखेन यदि संतापोपराममये
'श्रीरामनिवास' नामपौराऽऽराममीक्षेथाः ॥ १ ॥

साङ्गानेरगोपुरसमीपस्थं द्वारम् उल्लङ्घ्य। एतेन इत आरभ्यैव तद्दर्शनक्रमः सूच्यते। वायसरायलॉर्डमेयोमहोदयस्य स्मारकरूपे स्वर्गीयमहाराजाधिराजश्रीरामसिंहदेवेन 'मेयो हॉस्पिटल' नाम्ना आङ्गलचिकित्सानुसारी सोयमातुरालयो निर्मापितः। अत्र हि नागरिका विना मूल्यमेव चिकित्सां लभन्ते। भारतवर्षीयप्रसिद्धातुरालयेषु परिगणितेऽस्मिन् सुयोग्याः सिविलसर्जना एव प्रधाना भवन्ति। अनेके च डाक्टरास्तदायत्ता नियतचिकित्सां कुर्वन्ति। अत्र हि दूरदूरतो नेत्र-व्रणादिरोगिणः समायान्ति। प्रतिवर्षं परोलक्षमुद्राव्ययो भवति। चिकित्सालयः आतुरनिवासश्चेत्युभयसंबद्धः सोऽयम्। वर्तुलां वृत्ताकारां विशालां च बैण्डवाद्यवेदिं 'बैण्डस्टैण्ड'। अये! यदि संतापोपशमं वाञ्छसि ॥ १ ॥

* जन्तुशाला *

केसरसटावान् हरिरेकतोऽयमुद्गर्जति
मृग-शश-कीशादिकमन्यतोऽपदिश्यताम्
कङ्क–कलहंस–कोक–बक–जलकुक्कुटादेः
संमुखे कपोत शुक-लावादिकमिष्यताम्।

---

साँगानेरदरवाजे के पासवाले बागके फाटकको उलाँघ, पहले 'मेयो हास्पिटल' (अस्पताल) देखिये। लॉर्डमेयो की लोहनिर्मित मूर्तिको देख 'जन्तुशाला' (हिरन, खच्चर आदिका बाडा) के पास से गोल और विशाल बाजेघरके चबूतरे (बैण्डस्टैण्ड) को देखिये। नानाप्रकारके घने वृक्षोंसे जहां सूर्यकी किरणें भी नहीं पहुँच पातीं ऐसे इन लताकुञ्जोंको देखिये। यदि सुखसे तापको दूर करना चाहते हैं तो 'रामनिवास'नामक पुरसमीपवर्ती बागको देखिये ॥१॥

गर्तगतभल्लूकान्तिकेऽसावुष्ट्रपक्षी भाति
नानाजातिजन्तुसहसंस्थितिर्विमृश्यताम्
लम्बलोहजालाच्छन्नजन्तुगृहमाला, पुरः
सेयं राजकीयपशुशाला परिदृश्यताम् ॥ २ ॥

अपदिश्यतां दर्शनाय व्यवह्रियताम् । गर्तगतो यो भल्लूकः ऋक्षः तस्य समीपे, उष्ट्रपक्षी 'शुतरमुर्गः', अनेन द्वयोः स्थानसंनिवेशो दर्शितः। नानाजातीयानां शुक-लावक-तित्तिरादीनामेकपञ्जरे स्थितिर्जन्तुस्वभावालोचकानां विशेषकौतुकावहेति सूच्यते। दीर्घेण लोहजालेन परिवृता जन्तूनां गृहमाला यस्यां सा ॥ २ ॥

✽ ऐलबर्टभवनम् 'ऐलबर्टहॉल' ✽

सूर्याचन्द्रमोभ्यां परिपालितमिवोपरितो
जैपुरनरेशैरग्रतोऽधिष्ठितमीयताम्
उपरिविलम्बि-विद्युद्द्वात्रिंशतदन्तुरितं
काचमणिदीपाधारयुगलमुदीक्ष्यताम् ।

---

एक तरफ ये बबरीसिंह गरज रहा है [ यहां नाहरभी समझ लेना चाहिये ]। दूसरी तरफ कई तरहके हिरन बारहसींगे नीलगाय, सुस्से बन्दर आदि देखिये। कंक, बनराज, हंस (नकली) चकवे, बगुले, जलमुरगावी आदि के सामने कई तरहके कबूतर कोयल तोते तीतर लवा मोर मैंना आदिको ( देखिये )। कुँए के माफिक बने खड्डेमें रहनेवाले भालू ( रींछ ) के पास ही ये शुतरमुर्ग है। अलग अलग जातिके जानवरों के एक स्थान पर रहनेकी आलोचना करिये [ जन्तुस्वभावके आलोचकोंके लिए यह कौतुकका विषय है ]। लोहे के लंबे जालों में जहाँ जानवरों के घर बने हैं ऐसी राजकी पशुशाला ( चिड़ियाखाना आदि ) देखिये ॥२॥

श्रीमद्रामसिंहमहाराजेनैलबर्टकृते
निर्मापितमादर्शोऽयं शिल्पिकृतेर्वीक्ष्यताम्
हंहो प्रतिवत्सरं परीक्ष्यमाणबालमिदं
विशदविशालमेलबर्टहालमीक्ष्यताम् ॥ ३ ॥

एलबर्टभवनस्य उपरिभागे एकतः सूर्यस्य अपरतश्चन्द्रस्य रथाधिष्ठित चित्रं काचाच्छन्नजालिकायामालोक्यते, तत्रोत्प्रेक्षा। द्वाराग्रभागे च--महाराज-पृथ्वीराजमारभ्य अर्वाचीनस्वर्गीयमहाराजश्रीमाधवसिंहदेवपर्यन्तानां जयपुरराजानां विशालचित्राणि सन्ति, अतस्तदधिष्ठितमिदम् इयता प्राप्यताम्। विद्युद्वर्तिशतैः दन्तुरितम् उन्नतदन्तशोभितम्। दीपाधारयुगलं 'झाड'द्वयम्। महामूल्यं महाविशालं चेदं शिल्पकलाभरं लोकानां विस्मापकमस्ति। इदं शिल्पिनां कृतेः रचनायाः आदर्शभूतम्। परीक्ष्यमाणाः बाला यस्मिन् तत्। प्रतिवर्षं परीक्षाभवन-( Axamination Holl ) रूपे व्यवहृतिः सूच्यते।

ऊपरके भागमें सूर्य और चन्द्रमा मानों जिसकी रक्षा कर रहे है, [छत के पास काचाच्छादित जालियों में सूर्य और चन्द्रमा के चित्र हैं]। आगे के भागमें जयपुर के राजाओं से जो अधिष्ठित ( रक्षित ) है [ दरवाजे के हॉलमें महाराजपृथ्वीराज से लेकर महाराज माधवसिंहजी ( द्वितीय ) तक सब राजाओंके आदमकद सुन्दर चित्र हैं ]। सैकडों बिजलीकी बत्तियों के दो कीमती अद्भुत काचके झाड देखिये। ऐलबर्ट ( प्रिंस आफ् वेल्स ) महोदयके स्मरणार्थ महाराजाधिराज श्रीरामसिंहजी के बनवाये हुए इसको कारीगरीका एक अद्भुत नमूना समझिये। जहाँ प्रतिवर्ष कालेजके विद्यार्थियोंकी उपाधि-परीक्षा ली जाती है ऐसे इस विशाल 'ऐलबर्टहाल' को देखिये ॥३॥



श्रीरामनिवासोद्यानहर्म्यमवलोक्यताम् ।

ऐतिहासिकवृत्तम्—प्रजानामानन्दार्थम् 'एलबर्ट एडवर्ड प्रिंस आफ् वेल्स' महोदयस्य स्मरणार्थं च स्वर्गीयमहाराजश्रीरामसिंहदेवेन तदिदं निर्मापयितुमारब्धम्। ६ फरवरी सन् १८७६ समये प्रिंसआफ्वेल्समहोदयेन निजहस्तद्वाराऽस्य शिलान्यासः कृतः। स्वर्गीयमहाराजश्रीमाधवसिंहदेवस्य समये तदिदं पूर्णतया निर्मितमभूत्। 'एडवर्ड ब्राडफोर्ड' महोदयेन ( एजन्ट गवर्नरजनरल राजपूताना ) २१ फर्वरी सन् १८८७ समये स्वहस्तेनोद्घाटितम्। अस्य निर्माणे ४१४२४४) रूप्यकाणां व्ययः समभूत्॥ ३॥

## विचित्रवस्तुभवनम ( म्यूजियम )

रोचितचतुर्दिक्चतुर्गुल्मटिकागुल्मवृता
मर्मरकृताऽसौ चारुचूडा परिलोक्यताम्
मर्मरगवाक्ष–जाल–कट्टहरश्रेणिभृता
शिल्पिकृता पञ्चतलपङ्क्तिरुपश्लोक्यताम्।
मञ्जुनाथ नीचैस्तले बौद्धकालचित्रच्छटा-
रुचिरपटावृतेऽत्र दृष्टिरुपढौक्यताम्
विभवविलासोदयात्स्वर्गपरिहासोद्यतं
श्रीरामनिवासोद्यानहर्म्यमवलोक्यताम्॥ ४॥

शीर्षदेशमारभ्य वर्णनमिदम्। रोचिताः शोभिताः चतुर्दिशो येन ईदृशेन

---

जिसके चारों कोनों पर चार विशाल गुंबजें ( छत्री ) बनी हुई हैं, ऐसी संगमर्मरकी बनी इस चूडा ( शिरोभाग, ऊपरीखन ) को देखिये। संगमर्मरके बने झरोखे खिडकी जाली कटहरे आदिकी पङ्क्तिसे भरे, कारीगरोंके बनाये जिसके पाँचों खनोंकी भूरि भूरि प्रशंसा करिये। बौद्धकाल

चतुःसंख्याकेन गुल्मटिकागुल्मेन ( गुम्मज-बुर्ज-छतरी ) वृता मर्मरपाषाण-निर्मिता चूडा शिरोभागः। कट्टहरः 'कटहरा'। पञ्चतलानां खण्डानां पङ्क्तिः समूहः उपश्लोक्यतां श्लाघ्यताम्। बौद्धकालिकचित्रच्छट्या रुचिरे, पटैः आस्तरण-जवनिकादिरूपैः आवृते।

ऐतिहासिकवृत्तम्—स्वर्गीयमहाराजश्रीरामसिंहदेवेन फतहसिंहराठोडस्य मन्त्रित्वे १८७६ तमे खिष्टाब्दे तदिदं निर्मापयितुमारब्धं स्वर्गीयमहाराजश्रीमाधवसिंहदेवेन च कान्तिचन्द्रवन्द्योपाध्यायस्य मन्त्रित्वे १८८७ तमे खिष्टाब्दे च तदिदं पूरितम्। एतद्भवनस्य निर्माणे ५१००३६; रूप्यकाणां व्ययोऽभवत्। वस्तूनि तु पृथक् समगृह्यन्त यानि अनन्तमुद्रामूल्यानि सन्ति। भवनस्य निर्माणं कर्नल एस्०एस० जेकबमहोदयस्य निरीक्षणे मीरतजम्मुलहुसेनस्य प्रबन्धे समभूत्। लालारामबख्श-शङ्करलाल-छोटीलालादिभिश्चित्रशिल्पिभिः चन्दर-तारादिभिश्चित्रकारैश्चाप्यत्र निजशिल्पं प्रकटितमस्ति। दर्शनीयवस्तूनां संग्रहस्तु लेफ्टिनेंटकर्नल टी. एच् हेंडलीमहोदयस्य निरीक्षणेऽभवत्। अस्य कार्यारम्भः सन् १८८१ वर्षे, उद्घाटनं च १८८७ वर्षस्य फर्वरीमासे समभूत्' श्रूयते यत् तस्मिन्काले नवनिर्मिते कौंसिलभवने नानादिग्देशागतैः समृद्धव्यापारिभिः 'मीनाबाजार'नाम्ना नानाविधानि विविधदेशीयानि च शिल्पवस्तूनि प्रसारितान्यासन्। अतिबुद्धिमता यशस्विना च महाराजेन श्रीमाधवसिंहदेवेन तानि सर्वाणि राजकोषतः क्रीतानि। एतान्येव च वस्तूनि 'म्यूज़ियम' भवने प्रतिष्ठाप्य कार्यारम्भः कृतो योहि सांप्रतमत्युन्नतिं गतः। एतद्भवनं विश्वविदितेषु शिल्पस्मारकगृहेषु परिगण्यते। भूमण्डलस्य

( बौद्धपीरियड ) के चित्रोंकी शोभा और बहुमूल्य परदे, बिछायतोंसे युक्त इस नीचेके खनपर दृष्टि दीजिये। वैभवविलासके कारण स्वर्गकेभी परिहास के लिये तय्यार इस रामनिवासके महलको देखिये ॥४॥

चतुर्दशाश्चर्येषु तदेतद्भवनमपि ससंमानमाख्यायते लोकैः। विचित्रवस्तुसंग्रहालयश्चायं भारतीयेषु एतेषु (म्यूज़ियम) अन्यतमः। अस्य हि दर्शनीयसामग्री शिल्प—इतिहास-शिक्षा-अर्थशास्त्र-इति चतुर्षु विभागेषु वर्गीकृता। या हि सम्प्रति भूयस्तरामुन्नतिं वृद्धिं च गमिता। अस्येतिहासो 'राजवीथ्यां माधवसिंहमहाराजस्य जीवनचरिते'पि द्रष्टव्यः ॥ ४ ॥

कुहचन नानाविधधातुवरशिल्पभृतं
कुहचिदनल्पशिलाशिल्पमुपभाल्यताम्
कुत्रचिदनेकदेश—भूषा—वेष—मर्त्यवृन्द—
मौषधिविशेष—जीवजातमधिपाल्यताम्।
क्वापि चैतिहासिकमनुष्य—मुद्रा—मूर्ति—युतं
क्वचिदुचितं नु चित्रजातमुपलाल्यताम्
विश्वमिव विष्वग्विधिविरचनचित्रवृतं
विविधविचित्रवस्तुवेश्म विनिभाल्यताम् ॥५॥

रौप्य-ताम्र-पित्तलादिधातूनां वरेण शिल्पेन मूर्ति-पात्रादिरूपेण भृतम्। शिलाशिल्पं पाषाणस्य मूर्ति-गृहादिकलारूपम्। नानादेशीयानां भूषण-वेष-

कहीं चाँदी ताँबा पीतल आदि धातुओं पर नानाप्रकारकी कारीगरियों से भरा। कहींपर अनेक प्रकारके पत्थरों पर अनेकही प्रकारकी कारीगरियें देखिये। कहीं अनेक देशों के गहने—पहराव—मनुष्य—आदिके समूह, कहीं अनेक औषधियां, और कहीं अनेक जीवजन्तु देखिये। कहीं (यह महल) ऐतिहासिक मनुष्य—सिक्के और मूर्तियों से युक्त है तो कहीं उचित चित्रसमूह देखिये। विधाताकी चारों तरफ़की (त्रिलोकीकी) सृष्टिरचनाके चित्रों (नकशे) से भरा दूसरे जगत् की तरह इस म्यूज़ियम (अजायबघर) को देखिये ॥ ५ ॥

विन्यास-मनुष्याणां वृन्दम्। अधिपाल्यतां दृश्यतामिति यावत्। विष्वक् समन्ततः विधिविरचनस्य विधातुः सृष्टिरचनायाः चित्रैर्वृतं विश्वं जगत्। सर्वसृष्ट्या, चित्रैः जगति आश्चर्यभूतैर्वा पदार्थैर्वृतम् ॥५॥

क्रीडासत्राणि

'क्रिकेट' धावित्वाऽपरेण क्षिप्तमेतद्विकिटान्तरतो
लकुटाहतं चोच्छलत्खे गेन्दुकमीक्ष्यताम्
'टैनिस' मध्ये जालमालम्ब्याऽथ जालकाष्ठपट्टिकया
गेन्दुकमाहन्यमानमेतत्सुपरीक्ष्यताम्।
'फुटबाल' देश्यक्रीडाजातमिव पादघातमाहत्यैत-
दितस्ततः क्षिप्तं पादकन्दुकं समीक्ष्यताम्
पूर्वतनक्रीडानां प्रसह्य कण्ठपीडाकरं
नानाविधमेतच्छिशुक्रीडागृहं वीक्ष्यताम् ॥६॥

अपरेण 'बॉलर' इति ख्यातेन धावित्वा क्षिप्तम्। 'विकिट' उभयप्रान्ते रोपितं यष्टित्रिकम्। लकुटेन 'बैट' इति ख्यातेन आहतम् अत एव खे उच्छलत्। जालकाष्ठपट्टिका 'टैनिस' क्रीडायाः 'रैकट'। क्रीडाजातं क्रीडा

दुतरफा गडे 'विकिटों' के बीचमें दौड़कर एकने (बॉलरने) फैंकी और दूसरे (प्लेयर, 'खिलाडी') ने 'बैट' से (बल्लेसे) मारी, (अत एव) आकाशमें उछलती हुई इस गैंद को देखिये। बीचमें जाल बाँधकर दोनो तरफ के खिलाड़ियों से 'रैकट' के द्वारा ताडन की गई इस गैंदकी भी परीक्षा कीजिये। देशी खेलों के समूह की तरह पैरोंसे ठुकराकर इधर उधर फैंकी गई इस फुटबॉलकी भी आलोचना कीजिये। पुरानी क्रीडाओंको कण्ठपीडा (गलाघोटना) करनेवाले नानाप्रकारके इस खेलघरको देखिये ॥ ६ ॥

समूहः। पादघातं पादेन हत्वा, णमुल्। पादेन आहत्य इतस्ततः क्षिप्तं देशीयक्रीडावृन्दमिव स्थितं पादकन्दुकं 'फुटबाल' दृश्यताम्। आभिः क्रीडाभिः कबड्डीपालादिप्राचीनक्रीडानां निर्वासनेन तासां कण्ठपीडा कृतेत्याशयः॥ ६॥

* 'बैण्ड'वाद्यम् *

नानाविधपुष्पभरैर्नेत्रे परितर्प्य भृशं
शाद्वलहरित-हारि-क्षेत्रे परिघूर्ण्यताम्
शिमलागृहेऽन्तर्ग्रीष्मविद्रावणमारचय्य
श्रावणसुभाद्रपदसुषमा निर्वर्ण्यताम्।
सरलसोपानपथमारुह्याऽथ दक्षिणेन
मञ्जुनाथ वाग्भिर्जलकुण्डमुपवर्ण्यताम्
सायं सोमसौम्ययोः समन्तादवबध्येक्षणं
बैण्डवेदिमध्ये बैण्डवाद्यमिहाकर्ण्यताम्॥७॥

शाद्वलेन हरितदूर्वापट्टेन हरिते हारिणि सुन्दरे क्षेत्रे 'फील्ड'। घूर्ण्यतां परिभ्रम्यताम्। श्रावण-भाद्रपदमासयोः सुषमा शोभा। अनेन—जलयन्त्र-

नानाप्रकारके पुष्पों से नेत्रोंको तृप्त करके हरे हरे दूबोंके क्षेत्रों (फ़ील्ड) में घूमिये। शिमलाघर के भीतर गरमी को दूर भगाकर सावन भादौं की शोभा देखिये। [यहाँ नलकी कल मोड़ने से पलभरमें जल बरसने लगता है]। दक्षिणकी तरफ (पशुशाला होकर बैण्डघर आनेमें) सीधी सीढ़ियां चढ़ कर कवितावाणीमें जलकुण्डका वर्णन करिये। सोम और बुधवारके दिन सायंकाल बाजेघरमें बैठ कर सब तरफसे आँख हटा बैण्ड बाजा सुनिये॥ ७॥

साहाय्येन परितो भवन्ती वर्षा सूच्यते । अत एव 'सावनभादवा' इति नाम्नाऽस्य स्थानस्य लोके ख्यातिः । दक्षिणेन-मेयोहास्पिटलद्वारतः प्रविश्य पशुशालामुल्लङ्घ्य प्रत्यङ्मुखमागच्छतः पुरुषस्य कृते दक्षिणदिशि । सौम्यो बुधवारः । ईक्षणम् अवबध्य दर्शनव्यापारं त्यक्त्वा । नेत्रे निमीलय वा । अनेन 'लय'शून्यस्य आकुलसंगीतस्य क्रमः सूचितो यो ह्यस्मिन् वाद्ये उपादीयते । लयमाधुर्यमन्विष्यता संगीतमार्मिकेण तदिदं वाद्यम् असह्यतया नेत्रे निमील्य यथाकथंचिदाकर्ण्यत इत्यर्थः ॥ ७ ॥

## ※ मानप्रकाश 'सीनेमाभवनम्' ※

सवै०-बहुदूरत एव मिलत्प्रमदैर्निनदैर्जनमानसमोदमुदीक्षे
निकटे त्विह रामनिवासतटे चपला-रुचिरुत्प्रकटेति परीक्षे ।
स्फुटवाग्भिरुदञ्चितचित्रपटैः प्रकटैव हि नाटयकलेति समीक्षे
नवकौतुकिनामभिलाषहुताशविकाशकमानप्रकाशमपीक्षे ॥८॥

मिलन् प्रमदः ( हर्षः ) येषु अर्थात् हर्षोत्पादकैः निनदैः गीतिस्वनैः दूरत एव जनानां मोदं पश्यामि । चपलारुचिः ( विद्युत्प्रकाशः ) उत्प्रकटा अत्युन्नततया दूरतो दृश्या । स्फुटा मनुष्यवाक् येषु तैः उदञ्चितैः, चलद्भिः

---

हर्षमिश्रित गीतिध्वनियों के द्वारा दूरसे ही लोगोंका आनन्द देखता हूं । समीप आकर रामनिवासके संमुख ही ऊंचेस्थान पर बिजली की रोशनी स्पष्ट दिखाई देती है । बोलते और चलतेहुए चित्रों के द्वारा यहां नाट्यकला प्रकट ही है, यह आलोचन करता हूं । कौतुकी लोगोंकी अभिलाषाग्निको बढाने वाले इस 'मानप्रकाश' को भी देखता हूं ॥ ८ ॥

चित्रपटैर्नाटकीया लीलाऽविकलं प्रदर्श्यत इति भावः। अपि ईक्षे। 'मानप्रकाश' चित्रभवनमपि पश्यामीत्यर्थः ॥ ८ ॥

## ※ नवनिर्मितः कालेजपरिसरः ※

स्वस्वविषयेषु भूरिनिपुणो विपश्चिद्गणो-
ऽध्यापयति च्छात्रान् यत्र हर्म्यतले निस्तुले
विज्ञानोपयोगिबहुमूल्यवस्तुजालेनेह
वैज्ञानिकशालेयं विभाति नित्यनिर्मले।
क्रीडन्ति हि छात्रा यत्र सायन्तनकाले पुरः
प्राङ्गणान्तराले दिव्यदूर्वाहरितस्थले
मानमहीपालेनोपवेशितो विशाले स्थले
राजकीयकालेजोऽयमालेख्यो मनस्तले ॥९॥

विपश्चिद्गणः विद्वत्समूहः। निस्तुले अनुपमे 'सुन्दरे'। नित्यनिर्मले कालेजे वैज्ञानिकशाला 'लैब्रोरेटरी' बहुमूल्यवस्तुसमूहेन विभाति। राजकीयकालेजः 'महाराजास् कालेज', मनस्तले आलेख्यः अङ्कनीयः ॥ ९ ॥

---

अपने अपने विषयके पूर्ण विद्वान् अध्यापक सुन्दर भवनों में जहाँ छात्रोंको पढ़ाते हैं। सर्वदा स्वच्छ रहनेवाले इस कालेजमें वैज्ञानिकशाला (लैबोरेटरी) साइन्सके बहुमूल्य सामानों से सुशोभित है। कालेज के आगे खुलेहुए मैदानमें सायंकाल छात्रगण हरी हरी दूबोंके फील्डमें फुटबाल आदि खेलते हैं। मानमहीपाल के द्वारा विशाल स्थानमें स्थापित इस राजकीय कालेजको हृदयपट पर अङ्कित करिये ॥ ९ ॥

## ❋ फतहटीबा 'तोपध्वनिः' ❋

गगनमवाप्य गाढगन्धवहाद्वेणीभवन्
बाढमवगूर्णो गिरिश्रेणीमभिगम्य ताम्
ध्वनितो दिगन्तरेषु यातो गिरिगह्वरेषु
मिलितो रवेण विहगानां परिभ्राम्यताम् ।
मारुतमहिम्ना घनवृक्षमण्डलीषु मिलन्
कर्णशष्कुलीषु किरन् मोदं परिश्राम्यताम्
क्लीबानभिधुन्वन् फतेटीबामध्यदेशेऽधुना
क्षीबायितः सोयं तोभनिर्घोषो निशम्यताम् ॥१०॥

गाढगन्धवहात् प्रबलवायोर्वशात् वेणीभवन् वेणीरूपेण उपरिगच्छन्नित्यर्थः । गिरिश्रेणौ प्रतिध्वनिना बाढम् अवगूर्णः गुञ्जितः । घनासु निबिडासु वृक्षमण्डलीषु । परिश्राम्यतां श्रमजीविनाम्, पूर्वं हि मध्याह्ने तोपध्वनिश्रवणोत्तरं तेभ्यः अवकाशोऽदीयत । क्षीबायितः मत्त इव सर्वतः प्रसरन् । तुभ्यते अनेनेति तोभः । 'णभ तुभ' हिंसायाम् ॥ १० ॥

---

प्रबलवायुके द्वारा आकाशमें इकट्ठे हुए, पहाड़ों में पहुँच कर खूब गूँजते हुए । दिशाओं में प्रतिध्वनित हुए, पहाड़की गुफाओं में पहुँचे, उडेहुए पक्षियों के शब्दसे मिले । हवाके झोंकों से घनी वृक्षश्रेणिमें टकराये, मजदूरों के कानोंमें आनन्द बरसाते हुए । [ पहले दुपहरकी तोप चलनेपर मजदूरों को अवकाश मिलताथा ] । डरपोकोंको कँपानेवाले मस्तकी तरह इधर उधर खेलनेवाले इस तोपके शब्दको 'फतहटीबे' में सुनिये ॥ १० ॥

# श्रीमानगुल्मटिका ( 'स्टेच्यू-सरकिल' )

दक्षिणतो यस्य मानसैन्योपनिवेशो भाति
नव्योपनिवेशो यस्य चोत्तरतो वीक्ष्यताम्
पश्चिमतश्चोभूपतिसदनं समीक्ष्य, ततो
ह्यामुखतो भव्यभेषजायतनमीक्ष्यताम् ।
चत्वारो विशालपथाश्चश्चन्ति हि चतुर्दिक्षु
यस्य मञ्जुता च महत्ता च सुपरीक्ष्यताम्
मानमह्यमानसरमिरजाप्रसाद्यमान-
मानभूरिमान'मानगुल्मट' मुदीक्ष्यताम् ॥

मानसैन्योपनिवेशः 'मानगार्ड'। नव्योपनिवेशः 'न्यूकौलोनी' [ प्राचीन-गन्दीमोरीसमीपवर्तिनवीनसंनिवेशः ] । भव्यभेषजा० — 'लेडीविलिङ्गडन हॉस्पिटल'। मानमह्यमान० — मानेन श्रीमन्मानसिंहनरपालेन मह्यमानः सत्क्रियमाणो यो मिरजा इस्माइलमहोदयस्तेन प्रसाध्यमानम् अलंक्रियमाणम्। मानभूरि० — मानेन दैर्घ्यायामादिपरिमाणेन बहुमानम् ( अधिकसमादरम्, भूरिकृतादरमित्यर्थः ) ।

---

दक्षिण की तरफ जिसके 'मानगार्ड' है और उत्तर की ओर जिसके 'न्यूकौलोनी' देखिये । पश्चिम की तरफ 'चौमूहाउस' देखकर संमुख ( पूर्व ) की ओर नया अस्पताल देखिये । जिसकी चारों दिशाओं में चार बड़े बड़े रास्ते सुशोभित हैं, जिस ( सरकिल ) की सुन्दरता और विशालता अच्छी तरह जाँचिये । श्रीमान् माननरपाल से संमानित सरमिरजाद्वारा सजाये गये, मान (विशाल परिमाण)में मानके योग्य इस 'मानगुम्मज' 'स्टेच्यू सरकिल' को देखिये ।

## 'मानगार्ड'

'रामोद्यान'सदेशविनिवेशितपुरुपरिसरम् ।
'मानसैन्यविनिवेश' मभिनिवेशतो व्रज सखे ॥

'रामबाग' समीपे स्थितः पुरुः (भूयान्, विशालः) परिसरो यस्य तम्। 'मानसैन्यसंनिवेशः' [ 'मानगार्ड' ] । अभिनिवेशतः ( आग्रहेण उत्साहेन ) ।

---

'रामबाग' के समीप बड़ा लंबा चौड़ा जिसका घेरा है ऐसे इस 'मानगार्ड' में बड़े आग्रह और उत्साह से चलिये।

## 'हास्पिटल'

नासा-नेत्र-कर्ण-दन्तरोगाणां चिकित्सां यत्र
रोगिणः पृथक् पृथग् विभागशोऽवकोकेरन्
विस्फोटकगुल्माश्मरीदीर्घरोगिणोऽपि यत्र
चित्रं शस्त्रकर्मणा सुशान्तिमुपढौकेरन् ।
आतुरनिवासमथ 'एक्सरे' विभागमितो
वस्तूनां परीक्षणविलासमुपश्लोकेरन्
वैद्यकचिकित्साक्रमे येषां विचिकित्सा भवे-
न्न तर्नाचिकित्सालयमेते परिलोकेरन् ॥ १

अवकोकेरन् प्राप्नुयुः । 'कुक वृक' आदाने । उपढौकेरन् प्राप्नुयुः । वस्तुपरीक्षाविलासः 'लैबोरेटरी' । उपश्लोकेरन् श्लाघेरन् ।

---

जहां रोगी 'आईवार्ड' 'डेन्टलवार्ड' आदि विभागों के द्वारा रोगों की चिकित्सा कराते हैं। फोड़े-गुल्म पथरी आदि के भयङ्कर रोग शस्त्र चिकित्सा से जहां शान्त किये जाते हैं। जहां के बीमारों के पृथक् पृथक् निवास, 'एक्सरे' विभाग, ( लैबोरेटरी ) आदि की प्रत्येक तारीफ करते हैं। वैद्यकचिकित्सा में जिन्हें संदेह हो वे 'लेडी विलिंगडन हॉस्पिटिल' को देखें ॥

## * मोतीडूंगरी *

साँगानेरगोपुरमतीत्य दक्षिणायां दिशि
पक्षिरवरम्योद्यानपद्धतिरुदीक्ष्यताम्
मध्ये मञ्जुवाटिकासु पौरजनगोष्ठीसुखं
गायद्भूरिबिम्बोष्ठीकदम्बकमपीक्ष्यताम् ।
मञ्जुनाथ भङ्गाघूर्णमाननयनानामिदं
चूर्णमादिभव्यभूरिभोजनं समीक्ष्यताम्
दधती पुरस्ताद् गणनाथनाम ज्योती रहो
रम्याराममञ्जु'मोतीडूंगरी' निरीक्ष्यताम् ॥११॥

पक्षिरवेण रम्याणाम् उद्यानानां पङ्क्तिः । भङ्गापानेन घूर्णमाने नयने येषां (जनानाम्) । चूर्णमा 'चूरमा' 'चूरमूं' । पुरस्ताद् गणनाथ(गणेश)-नामकं ज्योतिः रहः दधती । रम्यारामैः मञ्जुः ॥ ११ ॥

---

साँगानेर दरवाजे को उलाँघकर जयपुरसे दक्षिण दिशामें पक्षियों के शब्दसे मनोहर बागोंकी पङ्क्ति देखिये । बीचमें—'लड्डूवाली' 'पताशेवाली' आदिवाटिकाओं में पुरवासियों की गोठों के आनन्द और गाती हुई सुन्दरियों के समूह भी देखिये । भाँगसे जिनकी आँखें घूम रही हैं ऐसे नागरिकों का चूरमादिका भूरिभोजन भी देखिये । संमुख 'गणेश' नामकी जागती जोति (सिद्धपीठ) को धारण करनेवाली, रमणीय बागों से मनोहर, इस 'मोती-डूंगरी' को देखिये ॥ ११ ॥

### ❋ टीबेश्वर ❋

दो०— भ्रमणरसत्तीवेषु टीबेश्वरभूरपि सुखा ।
भङ्गाऽऽश्रयिजीवेषु जीवातुर्जलमुत्तमम् ॥ १२ ॥

भङ्गासेविनो जीवाः उत्तमं जलमेव जीवनौषधं मत्वा एवंविधेष्वपि स्थानेषु अनुरज्यन्तीत्यर्थः ॥ १२ ॥

### ❋ झालाना ❋

प्रावृषि प्रफुल्लकच्छकेतककुसुममिदं
चक्रे जलबन्धान्मुदं नन्दनाऽवहेलकम्
निर्यज्जलनिर्झरे ननन्द यत्र चोपवने
गोष्ठीगतमिन्दुमुखीवृन्दमतिवेलकम् ।
मञ्जुनाथ भाग्यवैभवेन वनमेतदभू-
द्भग्नद्रुमभूमौ भ्रमद्भूयिष्ठकमेलकम्
बालानामिदानीं पूर्वकालानां कथेयमभू-
ज्झालानाधराणिजातमञ्जुतममेलकम् ॥१३॥

नन्दनवनस्यापि तिरस्कारकमिदमुपवनं पूर्वं 'जलबन्ध'कारणान्मुदं चक्रे।

---

भ्रमण के शौकीनों के लिये 'टीबेश्वर' की भूमि भी सुखकारक है। ( क्योंकि ) भांग पीनेवाले जीवों के लिये उत्तम जल जीवनजड़ी है ॥ १२॥

पहले वर्षा में यहाँ केवड़ेके फूल खूब खिलते थे जिससे यह नन्दन वनसे भी बढ़कर आनन्द देता था। बागों में जलके झरने चलतेथे जिनपर गोठोंमें आई सुन्दरियोंके झुंड हरदम आनन्द करते रहते थे। अब भाग्यवैभवसे

अतिवेलं भृशम् । उपवनमपि शुष्कवालुकामयत्वादुष्ट्रगम्यं वनमभूदित्यर्थः । झालानास्थाने जातं वनसोमवारमेलकं साम्प्रतिकानां बालानां कृते इतिहासकथेवाभूदित्याशयः ॥ १३ ॥

## ❋ रामबाग ❋

कलितकपाटतुङ्गतोरणवितानयुता
वितत्तविटङ्कवरवातायनजालेयम्
पुष्पितपलाशिभिः प्रशस्तपवनेन सुखा
विद्युद्दीपदर्शनीयचारुचन्द्रशालेयम् ।
मञ्जुनाथ नानाविधवास्तुशिल्पकौशलेन
प्राघुणिकीभूतभूरितोषितनृपालेयम्
श्रीमन्मानसिंहमहीपालेनोपनीतोन्नति-
मारामान्तराले रामबागहर्म्यमालेयम् ॥ १४ ॥

वितता: विटङ्का वराणि वातायनानि जालिकाश्च यस्यां सा । विटङ्कः

---

यह ऐसा जंगल होगया है कि इस भूमि के सब पेड कट गये । अब और सवारियों की पहुंच नहीं, अधिकांश ऊंट घूमा करते हैं । इस समयके लड़कोंके लिये झालानेके सोमवारके वे शानदार मेले इतिहासकी कहानी होगये ॥ १३ ॥

जो सजे हुए कई तरहके किवाड, दरवाजे, महराबों से युक्त है। जिसके महलों की छतें बड़ी ऊँचीं, और खिडकी झरोखे आदि बड़ी सुन्दर कारीगरी के हैं । सुन्दर पुष्पित वृक्षों के कारण यहां की वायु प्रशस्त होने से यह ( स्वास्थ्य )सुखकारक है । यहाँके ऊपरके महलों में तथा हौज आदि स्थानों

कपोतपालिकासाम्यात् तुङ्गनमो देशः, 'किरीटवेदिकाविटङ्कपीठोल्लुठितारुणाङ्गुलि' इति बाणः। चन्द्रशालाः शिरोगृहाः। वास्तुशिल्पं भवन-निर्माण-कला। शिल्पकौशलेन-आगन्तुकीभूताः भूरि तोषिताः नृपालाः यया सा ॥ १४ ॥

※ नगरसमीपस्थानि कतिचिदुद्यानानि ※

विहर विनायकास्थदेवीमुपगम्य सुखं
पश्य स्नानसेवी बलदेवदुर्गरम्यताम्
किं धावसि दूरे चन्द्रशिखरे'हजारिबुर्ज'-
सेतु-रङ्ग-निर्झरेषु निर्भरं विरम्यताम्।
मञ्जुनाथ 'वाटिकाहनूमान्''तातवाटिका'वा
'चन्दूवाटिका'वा गानगोष्ठीकृते गम्यताम्
हरिते दिगन्ते स्थलचिन्तेयं नु किं तेऽभव-
ज्जयपुरनगरपुण्यपर्यन्तेषु रम्यताम् ॥ १५॥

'विनायका'ग्रामस्था देवी। तदिदं मन्दिरं दर्शनीयवनशोभं सिंहाद्यधिष्ठितत्वात्साहसिभिर्गम्यम्। बलदेवदुर्गं ('बुर्ज') पुरातनघट्टस्योपरिष्टात्

---

पर बिजली की रोशनी से यह देखने ही लायक है। यहां नानाप्रकारकी भवननिर्माणकला और कुराई आदिका वह कौशल दिखाया गया है कि जो राजा महाराजा यहाँ पाहुने होकर ठहरे वे सब प्रसन्न होगये। श्रीमान् मानसिंहमहाराजने जिसे बहुत उन्नति दी है वही यह 'रामबाग' के बीचकी हर्म्यमाला ( महलायत ) है ॥ १४ ॥

'विनायका की देवी' में जाकर सुखसे विहार करिये। टाँके के स्वच्छ जलमें स्नानकी इच्छा हो तो 'बलदेवबुर्ज'की रमणीयता देखो। दूर क्यों दौड़ते हो,

पर्वतकूटे वर्तते। वर्षाकाले पूरितजलटङ्कमिदं स्थानं स्नानाय वनशोभादर्शनाय चानुपमम्। 'चन्द्रशिखरं' नाहरगढीयपर्वतस्यैकतमं शिखरम्। 'सेतुनिर्झरा:' 'पाजकी खोल', 'रङ्गनिर्झरा:', 'रांग की खोल' इति प्रसिद्धाः। एतानि स्थानानि नाहरगढस्याधस्तात्। 'वाटिकाहनूमान्' 'बाडी का बालाजी' अजमेरीगोपुराद् बहिः शाकक्षेत्रान्तरतः। तातवाटिका 'दादाबाडी', मोतीडूंगरीमार्गे। चन्दूवाटिका 'चन्दू का बाग' आम्बेरस्य मार्गे। अत्र हि विशालं हर्म्यं सुन्दरं कुण्डं चेति गोष्ठ्यां सङ्गीतप्रबन्धार्थं रम्यमभवत्सांप्रतं तु राजपरिकर-प्रबन्धः। वर्षाकाले परितो दिगन्ते हरिते जाते जयपुरस्य चतुर्दिक्ष्वेव रम्यतमानि स्थानान्युपलभ्यन्ते। अतः केयं ते स्थलचिन्तेत्याशयः॥ १९॥

## ※ चरणमन्दिरं गणेशगढं च ※

शैलशिखरेऽस्मिन्नीरनिर्झरनिनदधरे
सलिलभरेण सस्यसुषमामपेक्षेथाः
दंशरकवृक्षैर्भृते भ्राम्यन्भूरि शैलपथे
चरणचकासि हरिमन्दिरमिहेक्षेथाः॥

---

'चन्द्रशिखर' 'हजारी बुर्ज' 'सेतुनिर्झर' 'पाजकी खोल' 'राँगकी खोल' आदि नाहरगढकी तलहटी के स्थानों में पूर्ण आनन्द करिये। 'बाड़ीके बालाजी' 'दादाबाडी', और यदि गोठके साथ गानेका जलसा भी है तो 'चंदू के बाग'में जाइये। बरसातमें जयपुर के चारोंतरफ जब हरियाली होगई है तब आपको विहारके स्थानों की क्या चिन्ता है? जयपुरनगर के आसपास हरकहीं आनन्द करिये॥ १९॥

दूरदूरदृश्यान्यथ पश्यन् गिरिशृङ्गगतं
नत्वा गणनाथमध्वखेदमप्युपेदेथाः
बान्धवगणेगस्त्वं गणेश्वरचतुर्थ्याः पर
गहन'गणेशगढ'गौरवमवेक्षेथाः ॥ १६ ॥

दंशाका: 'डांसरया' इति ख्यातास्तेषां वृक्षैर्भृते । भगवच्चरणाभ्यां चकास्ति शोभते तादृशं मन्दिरं 'चरणमन्दिरम्' । इदं स्थानं 'जयगढ' दुर्गसमीपस्थमिति न सर्वदा साधारणगम्यं केवलं भाद्रशुक्लपञ्चम्यां ( गणेशचतुर्थ्या द्वितीयदिने ) मेलकदिने दर्शनीयम् । बान्धवगणे गच्छतीति बान्धवगणेगः तत्पुरुषे कृतीत्यलुक् । संघीभूतैरेव तादृशं स्थानं गम्यते विनोदाय सिंहादिभयापनोदाय च । गणेशगढवर्णनमस्मत्पूर्वजश्रीकृष्णभट्टकविकलानिधीनां 'साहित्यवैभव'स्य वंशवीथी'२६६'पृष्ठे द्रष्टव्यम् ॥१६॥

❋ लालडूंगरी ❋

पूर्वदिशि सूर्यदेवगोपुरमतीत्य ततो
वामभागतोऽसौ वनमार्गः पर्यवेक्ष्यताम्
घनतमबालुकासमुद्रमवरुह्य मनाक्
मध्येवनमेषा वृक्षवाटिका परीक्ष्यताम् ।

जल के झरनों की मनोहर आवाजों से भरे इस पर्वतशिखर पर जलवर्षा से जो हरियाली फैली है उस पर नज़र दीजिये । 'डांसरया' के वृक्षों से भरे इस पहाडी रास्ते से घूमते घूमते 'चरणमन्दिर'देखिये । पहाडों पर से दूर दूर के दृश्यों को देखते हुए (आप) पर्वतशिखर पर विराजमान श्रीगणेशजी को प्रणाम करके रास्ते की थकावट मिटाइये। गणेशचतुर्थी के दूसरे दिन बन्धुबान्धवों के साथ ( यह स्थान अकेले आने योग्य नहीं ) दुर्गम और घने'गणेशगढ' का गौरव अनुभव करिये ॥ १६ ॥

रामगढबन्धाऽऽनीतनीरयन्त्रशालामेत्य
गणपतिमूर्तिः सुविशालाऽसौ समीक्ष्यताम्
धाराधरकाले दृश्यवैभवमयीयमद्य
मृत्तिकामयीव लालडूँगरी निरीक्ष्यताम् ॥१७॥

जयपुरनगरस्य पूर्वदिशि 'सूर्यपोल'गोपुरम् उल्लङ्घ्य वामभागे। समीक्ष्यत मित्यनेन अपरभागे मोतीडूंगरीस्थाने यादृशी गणपतिमूर्तिस्तादृश्येव विशाला लालडूंगरीस्थाने स्थापितेति द्वयोरालोचना सूच्यते। अत्र ग्रीष्मादि-कालेषु ॥ १७ ॥

**❋ गलता ❋**

जयपुरनगरपूर्वगोपुरमुपेत्य पुरा-
शिल्पपरिपाटीकृता 'घाटी' स्यात्पुरोगता
मध्ये गिरिसानुगतमुन्नतमुदेति दृशोः
श्रीमद्भानुमन्दिरं हि यस्मै जनता नता।

---

जयपुर से पूर्व दिशा में सूर्यपोल दरवाजे से निकल कर उसके बाँये हाथकी तरफ़ पहले वनमार्ग देखिये। फिर विकट बालू के समुद्र को उतर कर वन के बीच में यह वृक्षवाटिका देखिये। वहां से थोडी दूर चल, रामगढ के बंधे से लाये नलजल का कलकारखाना और टंकी आदि देखकर खुले स्थान में विराजी विशाल गणपतिमूर्ति का दर्शन करिये [ यहां'समीक्षापद'-से सूचित किया है कि जयपुर से दक्षिण'मोतीडूंगरी में जैसी मूर्ति है उस की संमुख दिशा में यहां भी हूबहू वैसी ही यह मूर्ति है,यह साम्य आलोचनीय है ]। वर्षाकाल में सुन्दर दृश्यों से भरी होने पर भी और समय में केवल मृत्तिकामयी इस लालडूंगरी को देखिये ॥ १७ ॥

मञ्जुना कदम्बकुण्डनिकटगतेन पथा
यज्ञवेदिकुण्डतटगाऽसौ सरणिर्गता
मालवमहीव नक्तमालवनविच्छुरिता
गालवमहर्षिमधुराश्रममही मता ॥ १८ ॥

पूर्वदिशो गोपुरम् 'सूर्यपोल'। पुराशिल्पपरिपाटी प्राचीनस्थापत्य-प्रकारः। घाटी पर्वतारोहमार्गः। नक्तमालः चिरबिल्ववृक्षः॥ १८॥

सवै०-परितो गिरिराजिरुदञ्चयते परितोषमियं मरुता चलता
नवनीपसमिद्धसुगन्धवहाऽप्यवनी बहु भाति विरूढलता।
अयि मञ्जुलनाथ विभाति मनाक् सरसी कृतसीकरशीतलता
गिरिगह्वरगोमुखतो गलता सलिलेन सुखं कुरुते गलता ।१९।

गिरिसमूहः चलता पवनेन परितोषं जनयति। विरूढाः लताः यस्यां

---

जयपुर के पूर्वी दरवाजे (सूर्यपोल और घाटीदरवाजा) पर पहुँचने पर पुरानीपरिपाटी की बनी घाटी सामने दिखाई देगी। घाटी के मध्यमें पर्वतशिखर पर सूर्यदेव का ऊँचा (शिखरबन्ध) मन्दिर दिखाई देगा जिसको सब लोग प्रणाम करते हैं। कदम्बकुण्ड के पासवाले सुन्दरमार्गसे यज्ञवेदी कुण्ड के जानेका मार्ग गया है। (यों) मालवदेशकी मही की तरह नक्तमाल (वृक्ष) वनसे मिली, गालवमहर्षि की सुन्दर आश्रमभूमि मिलती है॥ १८॥

चारोंतरफ पर्वतश्रेणि बहते हुए वायुके कारण बड़ा आनन्द देती है। बरसात में फूले हुए कदम्बों से सुगन्धित हरी भूमि लताओं से सुशोभित है। जल की फुँहारों से शीतलता करनेवाला कुण्ड (सूर्यकुण्ड) बड़ा सुहावना है। पर्वतगुफा के गोमुख से गिरनेवाले जलसे यह 'गलता' सुख देता है॥ १९॥

सा। नीपः कदम्बः । कृता जलसीकरैः शीतलता यया ईदृशी सरसी (सूर्यकुण्डः)। गलता पतता सलिलेन ॥ १९ ॥

※ गलतामेलकः ※

क०— कोविदकमठबन्धात्सिक्तजनखण्डेऽधुना
स्वैरं सूर्यकुण्डे स्नानकौतुकमुदीक्षेथाः
नीचैर्बृहन्मन्दिरेषु भूरिभक्तवृन्दोञ्चितं
दर्शनीयहिन्दोलनसंभारं निरीक्षेथाः।
कदलीकुलान्तः किल केलिकुण्डमेतं सखे
स्वच्छसुखसलिलसमिद्धमभिवीक्षेथाः
हिन्दोलकमेलकेषु किं दोलितचित्तोऽस्ययेे
गालवाश्रमेऽद्य सुखसंदोहं समीक्षेथाः ॥ २० ॥

कमठबन्धः-जले कूर्दनकालिकः 'कमठा' इति ख्यातो बन्धविशेषः। सिक्ताः जनखण्डाः यस्मिन्। कमठबन्धस्य एषैव प्रशंसा यावदुपरिभागात् कूर्द्यते तावत्पर्यन्तं जलोच्छलनं भवेत्। अत एव अहमहमिकया कूर्दनकोविदैर्घाट्या गच्छन्तो जनसमूहाः सिच्यन्ते। केलिकुण्डः 'केलका कुण्ड'। अये दोलितचित्तः इतस्ततो भ्रान्तचित्तः किम् असि। संदोहः संभारः ॥२०॥

---

चतुरों के बांधे 'कमठे' (जलमें कूदते समय का एक आसन) से जहां घाटीपर चलनेवाले लोग भींग जाते हैं, ऐसे सूर्यकुण्डमें स्नानका कौतुक देखिये। घाटी से नीचे—बडे बडे मन्दिरों में भक्तमण्डल से भरा, दर्शन के योग्य, हिंडोले का समारोह देखिये। केलेके बगीचे के बीच स्वच्छ और सुखकारक जलसे भरे 'केलिकुण्ड' को देखिये। मित्र हिंडोले के मेले में दोलायित (डांवाडोल) चित्त क्यों होरहे हो, गालवाश्रम में आज सुख-समारोह देखिये ॥ २० ॥

वाणी-भारती-सरस्वतीत्याद्युपनामकानामस्मत्पूर्वजश्रीद्वारकानाथ*कवीन्द्राणां

# गालवगीतम्

* छप्पय *

"निर्यन्निर्झरनीरनिनदनृत्यन्मायूरे
क्वचन कोकिलाकण्ठकुहूकलनिःस्वनपूरे ।
घनतरुलताविचित्रशिखरिसुन्दरकन्दरवति
मृदुतरशाद्वललसितमृगीमृगशावकरुचिभृति ।
इति सरस्वती भणति स्फुटं गालवस्य नामाङ्किते
इह कस्य मनो नाश्रमपदे लग्नं मुक्तजनाश्रिते ॥१॥

मायूरं मयूराणां समूहः। कुहू इति कलो निःस्वनपूरो यस्मिन् (आश्रमपदे)॥१॥

---

जिस आश्रममें कहीं जलके झरनोंका शब्द होरहा है और मयूरों का झुंड नाच रहा है। कहीं कोकिलों के कण्ठसे कुहू कुहूकी मधुर आवाजें निकल रही हैं। 'सरस्वती' कहते हैं-घने वृक्ष, लताओंसे विचित्र पर्वत और सुन्दर कन्दराओंवाले, महात्माओं से आश्रित, गालवनामाङ्कित इस आश्रम में किस का मन नहीं लगता ॥१॥

---

* जयपुरधराधिपति-प्राचीनमाधवसिंहमहाराजस्य राजसभाप्रधानकवीन्द्राणामेषां जीवनवृत्तं तु 'साहित्यवैभवस्य' वंशवीथी ५८२ पृष्ठे द्रष्टव्यम् ।

इह पर्वतदेशेषु वृक्षवीरुद्गुल्मेषु
स्फुटवद्धेषु सुमेषु फलेषु कलेषु दलेषु ।
स्वैरं नीरनदेषु विशेषस्थलवलयेषु
स्थितिशालिषु गतिमत्सु पशुषु पक्षिषु मनुजेषु ।
प्रेमप्रियाणि 'वाणी' मुखादिति वचांसि शृणु संनिधौ
श्रीरामनाम लिखितं श्रुतं सिन्धोरिव बन्धनविधौ ॥२॥
यत्रोपक्रममेत्य कोकिलः कूजति चूते
तमनु कलापिकुलं नु गायति क्ष्माभृति पूते ।
परे पत्ररथगणा वाद्यझङ्कृतिमथ सुवते
गुणिनो मरुतः परं लतासु स्वस्ति ब्रुवते ।
श्रीराममहारसविलसितं शिक्षन्तः किमु तत्पराः
तन्वन्ति रासमण्डलमधिस्तबकं स्तबकं मधुकराः ॥३॥

सिन्धुसेतुबन्धने पाषाणेषु यथा रामनाम लिखितं तथाऽस्मिन्स्थाने पर्वतदेशादिषु लिखितमित्याशयः ॥ २ ॥ पत्ररथाः पक्षिणः । 'स्तबकेषु स्तबकेषु

'वाणी' के मुखसे प्रेमभरे ये वचन सुनो कि जैसे समुद्रपर सेतु-बाँधने के समय पत्थरों पर रामनाम लिखा गया था वैसे यहां पर्वतस्थलों पर वृक्ष, लता, झाड़ियों पर, खिले फूलों पर, फलों पर, मनोहरपत्तों पर, जल और नदियों पर, विशेष विशेष स्थानमण्डलों पर, क्या स्थावर और क्या जंगम पशु, पक्षी और मनुष्यों पर सब जगँह रामनाम लिखा हुआ सुना-गया है ॥

जहाँ आम पर पहले कोकिल 'आलाप' शुरू करता है, फिर उसीके साथ

अधि'-अव्ययीभावः । मधुकराः कोकिलगानादिना सह रासमण्डलमिव कुर्वन्ति ॥ ३ ॥

रोषादिव मा कृथा वृथा नयनद्वयमरुणम्
तद्रूपं तव वपुर्जातमित्यूचे करुणम् ।
वाचंयमता शुभा तादृशो वाचः पक्षात्
अस्मन्मतमातिष्ठ हरित्वं भविता पक्षात् ।
किं कुहूकुहूकथने वरं कुरु चित्तं वैष्णवमखे
उपदिशति शुकः पिकनिकरमिह रामनाम वद हे सखे ॥ ४ ॥

स्यन्दन्मकरन्दस्य बिन्दुभिश्चन्दनचर्चाम्
वृन्तकच्छपीकलितपुष्पमणिपुष्पैरर्चाम् ।
निर्यन्निर्यासेन सुरभिधूपं दधुरग्रा-
च्चम्पककोरकदीपमथो फलभोगमुदग्राः ।

तादृश्या वाचः पक्षात् (अपेक्षया) वाचंयमता शुभा । पक्षात् (मासार्द्धात्) ॥ ४ ॥

---

पवित्र पर्वत पर मोर गाने लगते हैं । और पक्षी बाजोंका झंकार करतेहैं । गुणाङ्ग हवा लताओंमें 'स्वस्ति शब्द कहती है । इसतरह श्रीरामके भजनानन्द को सीखते हुए एकचित्त भौंरे फूलों के प्रत्येक गुच्छे पर गूंजते हुए क्या रास-मण्डल ही कर रहे है ? ॥ ३ ॥

रोषसे वृथा आँखें लाल मत करो। रोष करते करते तुम्हारा शरीर काला पड़ गया है । ऐसे बोलने से तो चुप रहना ही अच्छा । हमारा कहना मानो, एकपक्ष ( पन्द्रह दिन ) में तुम्हारा हरा रंग ( 'हरित्व' हरिरूप भी ) हो जायगा । कुहू कुहू कथनमें क्या धरा है, वैष्णवों के भजनयज्ञ में मन दो । यों तोता कोकिलसमूह को उपदेश देता है कि हे मित्र रामनाम जपो ॥ ४ ॥

मैलिन्दमञ्जुगुञ्जारवैः सामस्तोत्रं पर्वते
पञ्चोपचारमिव रघुपतेरुरवस्तरवः कुर्वते ॥५॥
व्यासाश्रम इव शुकप्रचुरवचनामृतशाली
वल्मीकाश्रम इव प्राप्तकुशलवपरिपाली ।
कौशिककाश्रम इव प्रणयिलक्ष्मणानुषङ्गी
वाशिष्ठाश्रम इव स्वरसशिष्टागमसङ्गी ।
समचतुराश्रमपूजाविधौ यत्र हरिः कुक्षिम्भरिः
श्रीगालवाश्रम इति मतो वरीवर्त्ति सर्वोपरि ॥६॥

वृन्तकच्छपी, पुष्पवृक्षविशेषः । मैलिन्दैः मिलिन्द(भ्रमर)संबन्धिभिः । उरवः विशालाः तरवः ॥ ५ ॥ शुकादयः श्लिष्टाः । समाः समानतया स्थिता ये ब्रह्मचार्याद्याश्रमाः तत्कृतपूजाविधौ ॥६॥

---

झरते हुए मकरन्द ( पुष्परस )-बिन्दुओंसे चन्दन लगाते हैं । डंठलों में लगे पुष्पोंसे पूजा करते हैं। बहते हुए गोंदका सुगन्धित धूप और अग्रभाग में लगी चम्पाकी कली का दीपक बनाते हैं । फलोंका भोग रखते हैं । भौंरों के गुंजारवों से सामवेद की स्तुति करते हैं । यों बड़े बड़े वृक्ष जहाँ रघुपति का मानों पञ्चोपचार पूजन करते हैं ॥ ५ ॥

यह व्यासाश्रम की तरह शुक (शुकदेवजी और तोता) के वचनामृतों से युक्त है । वल्मीकाश्रम की तरह कुशलवों ( तन्नामक रामपुत्र और दर्भों के खंड ) का परिपालन करनेवाला है । विश्वामित्र के आश्रम की तरह प्रेमी लक्ष्मण और लक्ष्मणा सारसकी स्त्री से युक्त है । वशिष्ठाश्रम की तरह आत्मानन्दमग्न शिष्टलोगों के आगमनसे युक्त है । समानरूपसे चारों आश्रम ( ब्राह्मण आदि ) की पूजाविधि में जहां भगवान् फल देनेवाले हैं । इसलिये गालवाश्रम सर्वोपरि है ॥ ६ ॥

शुकपिकचातकचटककोककलहंसचकोराः
निजनिजभावभरेण मनःकृतरामकिशोराः ।
परितो हरितो मिलत्सुधारससरितो रोधे
क्रीडन्ति स्म सुखेन मग्नकरणा भृशबोधे ।
किमुताऽनुरागशीला जना रासरसामृतचुलुकिनः
संततसमाधि-निर्बाधहरिचिन्तनधृततनुपुलकिनः ॥७॥
शिखरिणि यत्र विचित्रसानुमति सरः पवित्रम्
मणिनिबद्धनिःश्रेणि सुरभि शिशिरं मधुमित्रम् ।
गालवतपःप्रभावसदासमुदितपीयूषम्
पयोहारियोगीन्द्रकृष्णदासस्थितिभूषम् ।
नक्षत्रशतप्रतिफलमिलद्यस्य जलं जाने बुधाः !
सुस्नातदेवरमणीपतद्भूषणमिति सन्नो मुधा ॥ ८ ॥

मनसिकृतो ( ध्यातः ) रामरूपःकिशोरो यैस्ते। शुकादिपक्षिणः सरितो दिशश्चैव यत्र ब्रह्मज्ञाने मग्नकरणाः तन्मयेन्द्रियाः, तत्राश्रमपदे जना हरिस्मरणपुलकिनः स्युः किमुत किमाश्चर्यम् ॥७॥

कृष्णदासस्य स्थितिरेव भूषा यस्य तत् । नक्षत्रप्रतिबिम्बयुक्तं यस्य जलं

---

जहाँ तोते कोयल पपीहे चिड़िया चकवा हंस चकोर अपनी भावना के द्वारा किशोरावस्थावाले श्रीराम का मनमें ध्यान करते हैं । दिशायें, अमृत रससे भरी नदियें तक आत्माके निरोध और ब्रह्मज्ञानमें तन्मयेन्द्रिय हैं वहाँ अनुरागी मनुष्य यदि लीलामृतके पालन करनेवाले हों और समाधिमें निर्विघ्न हरिचिन्तनसे रोमाञ्चित होजाँय तो इसमें क्या आश्चर्य ॥ ७ ॥

स्नातोत्थितदेवरमणीपतद्भूषणयुक्तमिति सत् सत्यं, मुधा नो ॥८॥

सुकृतसमयमधिकृत्य समागतशिष्टनृदेवम्
स्नानदानजपहोममानितश्रीपतिदेवम् ।
क्वणितरणितभणितेषु यस्य शब्दितमतिमधुरम्
नामध्वनिकलितं नु लक्ष्यते कलकलविधुरम् ।
नित्यं निसर्गनिर्गतजलं यत्र गोमुखं राजते
केनापि कृता मालेव यत्परितः पदवी भ्राजते ॥९॥

समागताः शिष्टाः नृदेवाः राजानः यस्मिंस्तत् । वाद्यादिशब्देषु सत्स्वपि यस्य गोमुखस्य शब्दितं कलकलरहितं नामध्वनियुक्तमिव लक्ष्यते । गोमुखस्य चतुर्दिक्षु मार्गः मालेव भ्राजते ॥९॥

विचित्रशिखरवाले जिस पहाड़ पर रत्नजटितसीढीवाला, सुगन्धित, ठंढा, और वसन्त का सदामित्र । गालव ऋषिकी तपस्याके प्रभावसे सदा अमृत झरनेवाला, पयोहारि (केवल जलही पीनेवाले )योगिश्रेष्ठ महात्मा कृष्णदासजी के निवास से भूषित, एक पवित्र सरोवर है । जिसके जलमें ताराओं के प्रतिबिम्ब पड़ने से ऐसा मालूम होता है कि मानों स्नानकरके गई देवाङ्गनाओं के भूषण इसमें गिर गये हैं । यह बात सच्ची है झूठी नहीं ॥ ८ ॥

पुण्यसमयपर जहाँ शिष्ट और राजालोग आते हैं । स्नान दान जप होममें जहाँ विष्णु की मानता होती है । जहाँ गोमुख से सदा अपने आप जल निकलता है, जिसका शब्द बाजे भूषण और बातचीतके शब्द होनेपर भी कलकलरहित और मनोहर प्रतीत होता है । मानों नामध्वनि में लीन है । जिस गोमुख के चारों तरफ का मार्ग मालाकी तरह प्रतीत होता है ॥९॥

गालवमन्दिरमहितमेरुवरभालवकलिता
भित्तिसूत्रसंचरज्ज्ञानपदजनमणिललिता ।
अच्छाऽतुच्छसमुच्छलत्कजलसच्छविकिरणा
प्राक्तनसुकृतविपाकजातनवगुम्फाऽऽभरणा ।
केनापि निबद्धा पद्धतिर्गोमुखस्य मालेव या ।
मणिमध्यनायकप्रतिकृतिः सरोवरस्थितिरतिशया ॥१०॥
मन्दिरमतिसुन्दरं यत्र मन्दरमनुकुरुते
दर्पणमसृणशिलासु रुचिः प्रतिबिम्बं कुरुते ।
भित्तिषु विपिनविचित्रमहीरुहलतिकाललितम्
केकिकोककलविङ्ककुभकोकिलकुलकलितम् ।

गालवमन्दिरमेव मेरुवरः मालायां सुमेरुस्तस्य भालवेन कान्तिलेशेन कलिता । ज्ञानपदा जनपदवासिनो ये जनाः त एव मणयः तैः ललिता । उच्छलज्जलमेव मालायाः किरणाः । प्राक्तनसुकृतेन अस्या मालाया गुम्फो जातः । सरोवरस्थितिः नायकः-मध्यमणिसदृशी । गालवमन्दिरं मालायाः सुमेरुः, सरोवरं च नीचैर्लम्बिततरलस्थानीयम् । सूत्र-मणि किरण-सुगुम्फनादिभिश्च गोमुख्याः सविधस्थितताया उत्प्रेक्षणमित्याशयः ॥१०॥

वह चारों तरफ के मार्गोंकी माला गालवऋषिके मन्दिररूप सुमेरुके कान्तिलेश से युक्त है। भित्तिरूप सूत्रके सहारे चलते हुए नगरवासी (लोग) रूपी मनियों से ललित है। स्वच्छ सुन्दर उछलता हुआ गोमुख का जल ही उसकी कान्तिकिरण हैं। प्राचीनपुण्यों के परिणामसे हुआ गूँथना ही उसका भूषण है। किसी का बनाया चारों तरफ का मार्ग माला है और सरोवरकी स्थिति मध्यमणि ( लटकन 'धुगधुगी' ) है ॥ १० ॥

तुङ्गं विजेतुमुत्थितमिव प्रतिरवमिषतो गर्जयत्
दिवि मारुतधुतवसनाञ्चलैः कलिमागतमिव तर्जयत् ॥११॥

उरसि यस्य वनदाम, शिरसि शिखिपक्षापीडम्
अलिके गैरिकतिलकमीक्षते यः सव्रीडम्
मञ्जुलकर्णतटाऽवलम्बिगुञ्जासरशोभी
मकराकृतिकुण्डलविटङ्किकर्णस्थललोभी ।
पीतोत्तरीयकच्छांशुकः शृङ्गवेणुवादनरतिः
गोपालवेषधारी सदा यत्र विहारी रघुपतिः ॥१२॥

यस्य मन्दिरस्य कान्तिः प्रतिबिम्बम् उत्पादयति। कलिं विजेतुं तुङ्गतया उत्थितम्, अत एव गर्जत् ध्वजैस्तर्जयच्च ॥११॥ श्रीरामोपि गोपालवेषधारी सदा विहरति। एवं हरिरपि रामवेषधारी लसतीत्यग्रे सूक्तिः ॥ १२ ॥

---

जहाँ अतिसुन्दर मन्दिर मन्दरपर्वत का अनुकरण करता है। दर्पण की तरह स्वच्छ शिलाओं में जिसकी कान्ति प्रतिबिम्बित होती है। जो भित्तियों पर लिखे वन विचित्रवन लता आदि से मनोहर है। जिसपर मोर सारस चिड़े टिटहरी कोयल आदि लिखे हैं। जो प्रतिध्वनि के मिषसे गर्जना करता हुआ मानो कलिको जीतनेके लिए उठा है और आकाशमें वायुके फटकारे से फहराते हुए ध्वजाओं के वस्त्रों से मानों आते हुए कलियुगको तर्जना करता है ॥ ११ ॥

जिनके वक्षस्थलमें वनमाला, मस्तकपर मोरमुकुट, ललाटपर गेरुका तिलक, जो सलज्ज देखते हैं। सुन्दर कानके नीचे तक पहुँची हुई गुञ्जामाल से शोभित हैं। मकराकृति कुंडलयुक्त कानोंसे जो मन लुभाते हैं। पीले दुपट्टे की जिनने फैंट बाँध रखी है, शृङ्ग और बंसी बजाते हैं। इस तरह गोपालवेष धारण कर रघुपति जहाँ सदा विहार करते हैं ॥ १२ ॥

हेमहीरवरजटितकिरीटप्रसृमरकान्तिः
श्रुतिविटङ्किकुण्डलमरीचिभृतकुन्तलतान्तिः ।
कुसुमदामवक्षा ललामकञ्चुकपरिधानः
कृपाशालिदृक्पालिकटाक्षच्छटा दधानः ।
सुरतरुच्छायमणिवेदिकारत्नपीठमध्यम्भरिः ।
भुवि सकलसतां निर्वाणदो धनुर्बाणहस्तो हरिः ॥१३॥
रूपजलनिधौ कोकनदप्रसरः करचरणम्
चिकुरनिकरमपि वेद्मि तत्र शैवालस्फुरणम् ।
मुखमिन्दुर्नयनद्वयं नु मीनायितमस्मिन्
वचनममृतमधरो विरोचिकुरुविन्दममुष्मिन् ।
तत्रैव कौस्तुभो भानुमान् किरतितरां परितः करान्
उल्लस्य तनुः कादम्बिनी वर्षति मधुरिमसीकरान् ॥१४॥

कुण्डलकिरणैः भृता केशान्तं तान्तिर्विस्तारो यस्य सः । दृक्पाल्याः कटाक्षच्छटाः ॥१३॥ भगवतो लावण्यरूपे जलधौ करचरणं कोकनद(रक्तकमल) विस्तारः, चिकुरादयः शैवालादयः इति ॥ १४ ॥

हीरोंसे जडे सोनेके किरीट से जिनकी कान्ति चारोंतरफ फल रही है । कानोंमें शोभमान कुण्डलों की कान्तिसे जिनके केश भरे हैं । वक्षस्थलमें फूलोंकी माला, सुन्दर जामा पहन रखा है । कृपा करनेवाली कटाक्षशोभा नेत्रोंमें धारण की है । कल्पवृक्षकी छायामें मणिवेदिका के ऊपर रत्नसिंहासनके मध्यमें सकल सज्जनों को मोक्ष देनेवाले श्रीकृष्ण धनुषबाण हाथमें लिये जहाँ विराजते हैं ॥ १३ ॥

व्यतिभाते सीतावरस्य चरणे नखललिते
स्थिते वैरमवधूय किं नु पद्मे शशिकलिते ।
पुनरुद्भवति स्मरे विभौ सेवितुमभिजातम्
किं च तूणयुगलं नु पञ्चपञ्चेषुविभातम् ।
अथ सरस्वती भणति प्रियं भक्तभवाम्बुधितारणे
स्थाने सदैव जानेतरां नौके सुखविस्तारणे ॥ १५ ॥

नखललितयोः चरणयोः चन्द्रसहितयोः पद्मयोः संदेहः । अत एव वैरस्यागोत्प्रेक्षणम् । एवमेव चरणयोः तूणयुगलसंदेहः । पद्माङ्गुलयः पञ्चबाणस्थानीयाः । किञ्च भवाम्बुधितारणे इमे चरणे नौके जानामि इति स्थाने ॥१५॥

उन श्रीकृष्ण के रूपसमुद्रमें कर और चरण लालकमल हैं । केशसमूह उसमें सिवाल हैं । मुख चन्द्रमा, नेत्रयुगल मछलियाँ, वचन अमृत, अधर कुरुविन्द का पुष्प है । वहाँ कौस्तुभ ही सूर्य है जो चारों ओर किरणें फैलाता है । और शरीररूपी श्याम मेघमाला उल्लसित होकर माधुर्यरूपी फुँहारें बरसाती है ॥ १४ ॥

नखसे सुन्दर रामचन्द्र के चरण इस तरह शोभित हैं मानों वैर छोड कर चन्द्रमा से युक्त दो कमल ही स्थित हैं । अथवा कामदेव के जन्म होने पर अपने स्वामी की सेवा करने के लिए अंगुलीरूपी पांच बाणों से युक्त मानों कामदेव के दो तरकस ( बाण रखने के घर ) ही हैं । सरस्वती प्रिय बात कहते हैं कि भक्तों को भवसागर से उतारने और सुख विस्तारने के लिये दो नौका ही हैं, यह मैं जानता हूं ॥ १५ ॥

## * नया घाट *

पर्यन्ते पलाशि–वरवल्लरी–वितानयुता
मध्ये मञ्जुकञ्जा जललहरी प्रकाशते
फुल्लल्लोलपाटलप्रसूनमकरन्दवहाः
सन्ततममन्दगन्धवाहाः समुपासते ।
मञ्जुनाथ गायत्कञ्जनयनाविलासवशो
निविडनिकुञ्जमसौ लोको न जिहासते
कान्ताजनविभ्रमविराजदुदकान्ता सेयं
नौविनोदकान्ता 'नवघट्ट'भूर्विभासते ॥२१॥

पलाशिनो वृक्षाः । पाटलम् 'गुलाब' । निबिडनिकुञ्जं न जिहासते न हातुमिच्छति,'ओहाङ्' । ध्वनिना समागमलालसापि सूच्यते । विराजन् उद-कान्तः ( जलतटम् ) यस्याम् । नौविनोदेन कान्ता मनोहारिणी, सति राजपरिचये नौकारोहणसौकर्यं सूच्यते ॥ २१ ॥

---

जो भूमि दोनों तरफ वृक्ष और श्रेष्ठ लतावितानों से युक्त है और जिसके मध्य में सुन्दर कमलोंवाली जललहरी (नहर) शोभित है । खिले हुए गुलाब के सुन्दर मकरन्द को लिए सुन्दर पवन जहां सदा चला करती हैं। जहां गाती हुई कमलनयनियों के विलास से वशीभूत होकर ये लोग इस सघन कुञ्ज को नहीं छोड़ना चाहते । जिसके जलतट कान्ता( स्त्री )-जनों के विलास से सुशोभित हैं, नौकाविहार से मनोहर यह 'नयेघाट' की भूमि है ॥ २१ ॥

### * जलयन्त्राणि *

पर्यन्ते बहुलतमवालुकासनाथमपि
चित्रं वीरुदन्ते जलं स्रवति समन्ततः
श्रावणसुमासि वनसोमवारदिव्यदिने
दीव्यति हि दोलारूढयुवति समन्ततः।
मञ्जुनाथ नीचैरवरुह्य पश्य यन्त्रगृहं
विस्मयावहं यद् धृतिं धुवति समन्ततः
अनलबलेन चलन्नलजलनालमिदं
'नव्यघाट'मक्ष्णोर्मुदं सुवति समन्ततः॥ २२॥

बालुकामये स्थानेपि जलस्रवणं चित्रम्। वीरुदन्ते लतानामन्तिके। श्रावणस्य शोभने मासि, सुवृष्टियुक्ते इत्यर्थः। दोलारूढाः युवतयो यस्मिन् तत्। यन्त्रगृहम् 'Water works'। धृतिं धुवति कम्पयति। यन्त्रप्रभावं दृष्ट्वा जनश्चित्रितो भवेदित्यर्थः। अग्निबलेन चलन्तः नलानां 'पाइप' जलनालाः यस्मिन्॥ २२॥

---

आश्चर्य है कि चारोंतरफ घनी बालू ( मिट्टी के टीबे ) होने पर भी लताओं के आस पास यहां चारोंतरफ जल झर रहा है। सावन के महीने में वनसोमवार के दिन चारों तरफ स्त्रियां यहां झूलों में झूलती हैं, जिससे यह सुशोभित होता है। इस (घाट) से कुछ नीचे उतर नलों का कलकारखाना ( Water works ) देखिये, आश्चर्यकारक जो देखने पर लोगों के धैर्य को कँपादेता है। अग्निके बलसे जहां नलजलके नाले चलते हैं ऐसा यह नयाघाट आंखों को सबतरह आनन्द देता है॥२२॥

### * झाडखण्डः रावलजलबन्धश्च *

मार्गे मञ्जुमीलन्मधुमालतीसुगन्धयुत-
रावलरचितजलबन्धमभिवीक्षेथाः
निर्यज्जलकोलाहलकौतुकमुदीक्ष्य ततः
समयं समीक्ष्य नवनौविनोदमीयेथाः ।
मञ्जुनाथ पश्चिमेन सेनासंनिवेशतटे
नीरनिकटेऽमुं नवप्राकारं प्रविन्देथाः
खेलत्खण्डपरशुपरीष्टये प्रयातं दिवः
खण्डमिव मोदाज्झाडखण्डमभिवन्देथाः ॥२३॥

मीलन्त्यः उन्मीलन्त्यः (मालत्यः) । समयानुसारम् (यावान् समयो भवेत्) नौचालनविनोदम् ईयेथाः प्राप्नुयाः, ईङ् गतौ । क्रीडतः खण्डपरशोः शिवस्य परीष्टये प्रतीक्षायै आगतं दिवः खण्डमिव स्थितम् ॥ २३ ॥

---

खिलीहुई चमेलियों का जहां मधुर सुगन्ध आता है, ऐसा रावलजी का बनवाया जलबन्ध मार्ग में देखिये । बहते हुए जल का कोलाहल और कौतुक देख चुकनेपर समय को देख कर अर्थात् जितना समय हो उसके अनुसार नौका चलानेका आनन्द भी प्राप्त करिये । बन्धके पश्चिमकी तरफ सेनानिवास ( लान्सर ) के पास जलके किनारे ही नये बनाये परकोटे में पहुँचिये । विहार करतेहुए शिवजीकी प्रतीक्षा में ( उनकी सेवा के लिये ) मानों स्वर्गका एक खण्ड ही आया हो, इस तरहके इस 'झाडखण्ड' को प्रणाम करो ॥ २३ ॥

## ※ पुराना घाट ※

परितो हरितशस्यशालिशैलमाला भाति
तदधो विशालाऽऽक्रीडसरणिर्विभासते
भ्राम्यन्ती कुसुमवाटिकासु पादपानां तले
शोभायामतुल्या जलकुल्या भूरि भ्राजते।
मञ्जुनाथ चित्रं गिरेरङ्के चन्द्रशाला भान्ति
कर्कशशिलानामङ्के वालुका प्रकाशते
विभ्रमविहारभूमिरिव भोः प्रकृतिदेव्या
भाग्यैः सुखसेव्या घाटवसुधा विराजते ॥ २४ ॥

आक्रीडानाम् उद्यानानां सरणिः पङ्क्तिः। यदा हि 'कारखाना' जलबन्धः पूरितोऽभूत्तस्मिन् समये प्राचीनघट्टे आरामेषु वृक्षाणां तले भ्राम्यन्ती जलकुल्या भूरि शोभते स्म । पर्वतस्य अङ्के उत्सङ्गभागे शिरोगृहाः, शिलानां समीपे च वालुका प्राप्यते इत्येव चित्रम्। यः किल पर्वतमयः प्रदेशस्तत्र

---

चारोंओर हरियाली से भरी ऊंची ऊंची पर्वतमाला है। उसके नीचे बडे बडे बागोंकी श्रेणि चली गई है। पुष्पवाटिकाओं में वृक्षों के नीचे नीचे घूमती हुई जल की नहर बहुत सुन्दर मालूम होती है, जो कि शोभा में बेजोड है । आश्चर्य है कि पहाडकी गोदी में बडे बडे सुन्दर महल और चांदनियां सुशोभित हैं [देखिये रूपनिवास, व्यासजीका बाग आदि]। और कठोर शिलाओंके पास ही सोनेकेसे रङ्ग की कोमल बालुका है। [यह बात सर्वत्र सुलभ नहीं]। अत एव प्रकृतिदेवी की मानों विहारभूमि ही हो ऐसी, भाग्योंसे भोगने लायक यह घाटकी भूमि शोभित है ॥२४॥

स्वर्णसदृशी कोमलवालुका दुर्लभा, यश्च वालुकाप्रदेशस्तत्र पाषाणाः अप्राप्याः । इह तु द्विविधमपि सौष्ठवं दृश्यते, अत एव प्रकृतिदेव्याः विलास-सूचिका विहारभूमिः ॥ २४ ॥

आरम्भादन्तपर्यन्तो घाटसंनिवेशः

विशदशिलाऽवबद्धमुल्लङ्घ्याऽवरोहपथं
श्रेष्ठिनिर्मितोपवने मोदमधिविन्दामः
पश्चाच्चूडसिंह-व्यास-रम्यारामसुद्वीक्ष्याल-
माज्ञया निरीक्ष्यान् भूभृदारामान्निरिन्दामः ।
मञ्जुनाथ पौरन्दरमारामं निरीक्ष्य ततो
जैनचैत्यशिल्पं वीक्ष्य चेतसाऽतिचन्दामः
घाटगोपुरस्य पुरः प्राचीरं प्रलङ्घ्य परं
प्राचीप्राञ्चले प्राचीनघाटमभिनन्दामः ॥२५॥

अवरोहपथः 'गूणी'। श्रेष्ठिनिर्मितं माणिकचन्द्रस्योपवनम् । राजाज्ञया दर्शनीयाः विद्याधर-रूपनिवासाद्याः राज्ञः आरामाः । निर् इन्दामः 'इदि

---

सुन्दर पत्थरोंसे बनी घाटी ( गूंनी ) को उलांघ, पहले सेठ मानिक-चन्द और अनन्तरामके बागमें आनन्द पाते हैं। फिर चूडसिंह और व्यासजी के बागोंको देखकर राजाज्ञासे देखनेयोग्य 'रूपनिवास' 'विद्याधरका बाग' आदि सरकारी बाग देखते हैं । फिर पुरन्दरजीका बाग देखकर जैनमन्दिर ( नसियां ) की कारीगरी को देखकर चित्त से हर्षित होते हैं। ( इस तरह ) घाटदरवाजेको लांघकर जयपुरसे पूर्वदिशा में पुराने घाटका अभिनन्दन करते हैं ॥ २५ ॥



प्राचीप्राञ्चले प्राचीनघाटमभिनन्दामः

परमैश्वर्यं' द्रष्टुं समर्था भवाम इति यावत्। जैनचैत्यं 'नसिया'। चन्द्रामः प्रसीदामः, चदि आह्लादे। प्राचीरं कोट्टः। प्राचीप्राञ्चले पूर्वदिग्भागे ॥२५॥

फुल्लकुसुमासु लसदारामावलीषु यत्र
रामा विहरन्ति गीतगोष्ठयां मोदमागता
भूपतिनिवासोचितसौध-सुखसज्जायुता
यद्रूपनिवासोद्यानमाला महदायता ।
मञ्जुनाथ निर्यज्जलवेणीविरहेण सेय-
मद्याऽऽरामश्रेणी हन्त तान्तिं समुपागता
नन्दनवनीव मोदजननी विबुधहृदा-
मन्यथा बभूव सेयमवनी सतां मता ॥ २६ ॥

मोदमागताः भूपतिनिवासेत्यत्र मध्ये विसर्गलोपो बोद्धव्यः। जलवेणी कुल्या। तान्तिं शोभाकार्श्यम्। अन्यथा जलवेणीसत्तायाम्। नन्दनवनी विबुधानां देवानां मोदजननी, इयमवनिः देवानां पण्डितानां च ॥२६॥

---

खिलेफूलोंवाले सुन्दरबागोंमें, गाना जहां होरहा है ऐसी गोठमें आई हुई सुन्दरियां प्रसन्नतासे विहार कर रही हैं। राजाओंके निवासयोग्य सुन्दरमहल और सम्पूर्णसुखसाधनोंसे युक्त 'रूपनिवास'नामक जिसकी उद्यानमाला बड़ी लम्बी चौड़ी है। बहती हुई जल की नहर बन्द होजाने से यह उपवनपङ्क्ति आज कुमला गई है। अन्यथा नन्दनवनी( स्वर्ग का बाग ) की तरह विबुधों ( देवता और पण्डितों ) के हृदयों को आनन्द देनेवाली यह भूमि सब ही सहृदयोंको संमत थी ॥ २६ ॥

### * घाट के बालाजी *

वारिद्धरेषु वल्गुवर्षावासरेषु सखे
बालुकोत्करेषु हारि हारित्यं प्रतीयताम्
मञ्जुनाथ घाटस्योत्तरेण वनवीथिपथे
दर्शनमनोरथेन यात्रा प्रविधीयताम् ।
पर्वतसमीपे पुरः प्राकारेण गूढतरे
तुङ्गमन्दिरेऽस्मिन् साधुसोपाने ह्यभीयताम्
नूनं नेत्रराजीवेन वीक्ष्या वनराजी तर्हि
घाटोद्यानराजी वत बालाजी समीयताम् ॥२७॥

बालुकोत्करेषु बालुकास्तूपेषु 'टीबा'। नेत्रकमलेन यदि वनपंक्तिर्दर्शनीया तर्हि घाटोद्याने राजते तच्छीलः श्रीमान्, 'बालाजी'हनुमान् समीयताम् उपगम्यताम् ॥ २७ ॥

---

हे मित्र ! बादलोंसे व्याप्त वर्षा के दिनोंमें बालूके टीबोंमें सुन्दर हरियालीका अनुभव करिये। घाटके उत्तरकी तरफ वनके रास्तेमें सैर देखनेकी इच्छासे यात्रा करिये। पर्वतके पास, सामने ही परकोटेसे घिरे ऊँचे मन्दिरमें इस सुन्दर सीढ़ी पर चढ़िये। नेत्रकमलसे यदि वनपङ्क्ति देखनी है तो घाटोद्यानमें विराजमान 'बालाजी' ( हनुमानजी )के जाइये ॥ २७ ॥

## ※ प्रभातपुरीनिर्झरः ※

हरितमनोज्ञशस्यशाली गिरिरस्ति पुरः
पुष्पितकदम्बभूरुहालीयं विमृश्यताम्
उच्चैः शैलमौलितः प्रपातिगिरिनिर्झरोऽसौ
तत्स्रुतजलाशयोऽसौ स्नानार्थं निविश्यताम् ।
मञ्जुनाथ धारावर्षिधाराधरकालेऽधुना
किमसि विषण्णमना जोषं नोपविश्यताम्
अम्बरनगरमार्गमध्यादुपयातपथा
सुप्रभातमायेच्चेत्प्रभातपुरी दृश्यताम् ॥२८॥

तस्मात् गिरिनिर्झरात्स्रुतस्य जलस्य आशयः ह्रदः । असौ निर्झरः असौ जलाशय इति प्रत्यक्षमङ्गुल्या निर्देशः । किमिति खिन्नचित्तः असि ? उत्तिष्ठ,जोषं तूष्णीं न स्थीयताम् । अम्बरमार्गात् उपयातः पन्थाः यस्याः सा । यदि सुप्रभातम् आयेत् आगच्छेत् तर्हि । स्थानस्यालौकिकसौन्दर्यं व्यज्यते ॥ २८ ॥

---

सामने सुन्दर हरियालीसे भरा पहाड़ है, सामने फूलेहुए कदम्बोंकी यह पङ्क्ति है, इस पर दृष्टि दीजिये । बड़े ऊँचे पहाड़के शिखरसे गिरने-वाला यह पहाड़ी झरना है, इसके झरावका यह कुण्ड है, इसमें स्नानके लिये जाइये । झडी लगीहुई है ऐसे इन वर्षाके दिनोंमें उदासचित्त क्यों हो ? चुप चाप मत बैठो । यदि सुन्दरप्रभात हुआ हो अर्थात् ( भाग्यसे अच्छा दिन आया हो ) तो आम्बेरके रास्तेके मध्यसे जिसका मार्ग जाता है, ऐसी 'प्रभातपुरी' देखिये ॥ २८ ॥

**❋ आम्बेर ❋**

अम्बरनगरपरिदर्शनमभीप्ससि चे-
 च्चेतो ध्रुवगोपुरमतीत्य बहिर्गम्यताम्
मध्ये मानसागरमवेक्ष्य जलसौधान्यपि
 कालमहादेव-गोविन्दोपवने रम्यताम् ।
मञ्जुनाथ घाटीमधिरुह्य नूतनेन पथा
 देलरामशिल्पपरिपाटीयं निशाम्यताम्
अम्बरनरेश-राजसौधसुषमामयीह
 विपुलविभामयी शिलामयी प्रणम्यताम् ॥२९॥

हे चेतः! ध्रुवगोपुरम् 'ध्रुवपोल' । जलसौधानि 'जलमहल' । देलरामशिल्पम् 'दलारामस्य आरामे । निशाम्यताम् दृश्यताम् । राजसौधस्य शोभा-सर्वस्वभूता शिलामयी भगवती ॥ २९ ॥

ऐतिहासिकवृत्तम्-शिलामयी मानसिंहमहाराजेन उडीसादेशादानीता । इयं हि गायत्र्याः अनेकपुरश्चरणानां केवलं सिद्धशिलैवासीत् पूर्वम् । सेयं प्रतापादित्यस्य इष्टदेवताऽभूत् । पश्चाच्च कायस्थराजं केदारं विजित्य आम्बेरनगर-

---

यदि आम्बेर देखना चाहते हो तो हे चित्त 'ध्रुवपोल' को उलांघ कर बाहर चलो । बीचमें 'मानसागर' और 'जलमहल देखकर 'काले महादेव' और गोविन्दजी के बागमें विहार करिये । फिर नये रास्तेसे घाटी चढ़कर दलारामके बागकी यह कारीगरी देखिये । ( फिर ) आम्बेरनरेशके राजमहलोंकी शोभासर्वस्व, पूर्णकान्तिमयी इन 'शिलामयी'(देवी)को प्रणाम करिये ॥ २९ ॥

